सभां प्रविष्टः सः यदि अयं सभापतिः क्रुद्धो मन्येत जानीयात् तदा तं सभापतिम् अभिमन्त्रयते यात इति मन्त्रेण । अथ यदि मन्येत दुग्धोयमिति तमभिमन्त्रयते तां ते वाचमास्य आदत्ते हृदयमादधे । यत्र यत्र निहिता वाक्तां ततस्तत आददे यदहं ब्रवीमि तत्सत्यमधरो सत्पद्यस्वेति । अथ यदा सभां प्रविष्टः सः अयं सभापतिर्द्रुग्धो मन्येत जानाति अयं द्रोहकर्त्ता तं सभापतिं तां ते वाचमितिमन्त्रेणाभिमन्त्रयते । 'एतदेव वशीकरणं' अथातः सभाप्रवेशनमित्यादि एतावत्पर्यन्तं सभावशीकरणविधानम् ॥ १३ ॥

अथातो रथारोहणम् ॥१॥ युङ्क्तेति रथं संप्रेष्य युक्त इति प्रोक्ते साविराडित्येत्य चक्रे अभिमृशति ॥ २ ॥ रथन्तरमसीति दक्षिणम् ॥ ३ ॥ बृहदसीत्युत्तरम् ॥ ४ ॥ वामदेव्यमसीति कूबरीम् ॥ ५ ॥ हस्तेनोपस्थमभिमृशति अङ्कौ न्यङ्कावभितो रथं यौ ध्वान्तं वाताग्रमनुसंचरन्तम् । दूरेहेतिरिन्द्रियवान्पतत्रि ते नोऽग्नयः पप्रयः पारयन्त्विति ॥ ६ ॥ नमो माणिचरायेति दक्षिणं धुर्यं प्राजति ॥ ७ ॥ अप्राप्य देवताः प्रत्यवरोहेत्संप्रति ब्राह्मणान्मध्ये गा अभिक्रम्य पितॄन् ॥ ८ ॥ न स्त्रीब्रह्मचारिणौ सारथी स्याताम् ॥ ९ ॥ मुहूर्तमतीयाय जपेदिहरतिरिहरमध्वम् ॥ १० ॥ एके मारित्रहरतिरिति च ॥ ११ ॥ स यदि दुर्बलो रथः स्यात्तमास्थाय जपेदयं वामश्विना रथो मा दुर्गे मास्तरोरिषदिति ॥ १२ ॥ स यदि भ्रभ्यात्स्तम्भमुपस्पृश्य भूमिं वा जपेदेष वामश्विना रथो मा दुर्गे मास्तरोरिषदिति ॥ १३ ॥ तस्य न काचनार्त्तिर्न रिष्टिर्भवति ॥ १४ ॥ यात्वाऽध्वानं विमुच्य रथं यवसोदके दापयेदेष उ ह वाहनस्यापन्हव इति श्रुतेः ॥ १५ ॥ ॥ १४ ॥

( जयरामः )—अथातो रथारोहणम् । वक्ष्यत इति सूत्रशेषः । ततः स्वामी रथं युङ्क्तेतिप्रैषेण सारथिं प्रेषयित्वा प्रेषितेन तेनैव युक्त इति निवेदिते साविराडित्येतावता मन्त्रेण रथमेत्यागत्य चक्रे रथाङ्गे हस्तेनाभिमृशति । तत्र रथन्तरमसीत्येतावता मन्त्रेण दक्षिणं चक्रम् । बृहदसीत्येतावता वामम् । अथ मन्त्रार्थः । तत्र त्रयाणां परमेष्ठी यजूंषि अङ्गान्यभिमर्शने० । योऽयं रथः सा विराट् अन्नदात्री देवता । रथन्तरादीनि सामानि । कूबरीं युगन्धरम् । उपस्थं नीडम् । हस्तेनेति सर्वत्र संबध्यते । तत्र मन्त्रः । अङ्कौन्यङ्काविति । तस्यार्थः । तत्र प्रजापतिस्त्रिष्टुप् अङ्कं तदभिमर्शने० । अङ्कौ द्वौ अङ्काख्यगणपावग्निविशेषौ । एवं न्यङ्कावपि । एवं भूतौ यावग्नी अभितो रथं रथस्य सर्वतो रक्षकत्वेन ध्वान्तं दुर्गमं प्राप्य वातस्याग्रं मुखमनु अनुसृत्य संचरन्तौ सम्यग्गच्छन्तौ वर्तेते ये चापरे दूरेहेतिः बृहज्ज्वालः तथा इन्द्रियं चात्रेन्द्ररथः । तथा इन्द्रियानुग्राहकः पतत्रि पक्षिकुलानुग्राहकमग्निवृन्दम् । एतेऽग्नयः नोऽस्मान्पारयन्तु निर्विघ्नेनाभीष्टं देशं प्रापयन्तु । किंभूताः । पप्रयः अस्मन्मनोरथपूरणशीलाः । ततो दक्षिणं धुर्यं धुरि युक्तं वाहं प्राजति प्रकर्षेणाजयति गमनाय प्रेरयति । अज गताविति धातुः । नमो माणिचरायेति मन्त्रेण । तस्यार्थः । तत्र प्रजापतिरुष्णिक् माणिचरः प्रेरणे० । माणिचरो रथा-

धिष्ठात्री देवता । तूष्णीं वामप्राजनम् । देवता अप्राप्य तद्दर्शनात्प्राक् यावच्छक्ति प्रत्यवरोहेत् रथा-दवतरेत् । पदातिर्भूत्वा गच्छेदित्यर्थः । संप्रति दृष्ट्वा ब्राह्मणान्प्रत्यवरोहेदित्यनुषङ्गः सर्वत्र । गाः प्राप्य तन्मध्यं गत्वा । पितॄनभ्यागच्छतः पित्रादिमान्यानभिक्रम्य प्रह्वत्वेनाभिपत्य उत्तीर्य च मुहूर्त-मतीयाय अतिवाह्य जपेदिहरतिरित्यमुं मन्त्रम् । तस्यार्थः । तत्र प्रजापतिर्यजुरग्निः रमणे० । हे अग्नयः यूयम् एके मुख्या इह रथे रमध्वं क्रीडध्वम्, यतो मम इह रथे रतिरस्ति अतो मा मां प्राप्य भवतामपि इह मद्रथे सुशोभना रतिरस्तु । स साधको यदि दुर्बलरथः दुर्बलो रथो यस्य स तथा स्यात्तदा तं रथमास्थाय जपेदयं वामिति मन्त्रम् । तस्यार्थः । तत्र द्वयोः प्रजापतिरनुष्टुप् अश्विनौ जपे० । हे अश्विना अश्विनौ अयं वां युवयो रथः दुर्गे विषमस्थाने स्तरः हिंसकाद्धेतोर्मा मां मारिषन् माहिंसिष्ट । रतृन्रिषौ हिंसार्थौ । एतेनोत्तरोऽपि व्याख्यातः । स रथो यद्येवमभिम-न्त्रितोऽपि भ्रम्यात् कुटिलङ्गच्छेत्तदा तद्ध्वजस्तम्भं भूमिश्चोपस्पृश्य जपेदेष वामित्यमुं मन्त्रम् । अर्तिः पीडा । रिष्टिर्विघ्नः । उ निश्चये । एष घासोदकदानरूपोऽपह्नवः अपराधमार्जनम् ॥ १४ ॥

( हरिहरः )—'अथा···हणम्' अथेदानीं कार्यार्थं जिगमिषोर्द्विजस्य यतो यानमपेक्षितमतो हेतो रथारोहणाख्यं कर्म वक्ष्यत इति सूत्रशेषः । 'युङ्क्षे···त्तरम्' तत्र युङ्क्षेति सारथिं संप्रेष्याज्ञाप्य ततः प्रेषितेन सारथिना युक्तो रथ इति प्रोक्ते सति साविराडित्येतेन मन्त्रेण एत्य रथसमीपमागत्य चक्रे रथाङ्गे अभिमृशति, कथं रथन्तरमसीत्यनेन मन्त्रेण दक्षिणं, बृहदसीत्यनेनोत्तरं चक्रं बृहद्रथन्तरे सामनी । 'वाम···वरीम्' वामदेव्यमसीत्यनेन मन्त्रेण कूबरीमीषादण्डाग्रमभिमृशतीत्यनुवर्तते । 'हस्ते···शति' उपस्थं रथमध्यं उपवेशनस्थानमिति यावत् । अभिमृशति आलभते हस्तेनेति सर्वत्र संबध्यते । अत्र मन्त्रः 'अङ्कौ···पयति' नमो माणिचरायेत्यनेन दक्षिणं धुर्यं दक्षिणधुरायां युक्तमश्वं वृषभं वा प्राजति प्रतोदेन प्रेरयति तूष्णीं वामम् । एवं गवां मध्ये रथं स्थापयति । 'अप्रा···पितॄन्' अ-प्राप्य अनासाद्य दूरत एव देवता हरिहरब्रह्मादिकाः प्रत्यवरोहेत् रथादवतरेत् । संप्रति ब्राह्मणान् वि-प्रान् संप्रति निकटे प्रत्यवरोहेत् मध्ये गाः सुरभीः प्राप्य मध्ये प्रत्यवरोहेत् । अभिक्रम्य पितॄन् पित्रा-दीन् मान्यान् अभिक्रम्य अभिमुखमेत्य प्रत्यवरोहेत् । 'न स्त्री···स्याताम्' स्त्री नारी ब्रह्मचारी उपकु-र्वाणको नैष्ठिकश्च स्त्रीब्रह्मचारिणौ सारथी न स्यातां न भवेताम् । 'मुहू···रितिच' मुहूर्तं क्षणमतीयाय अत्येत्य जपेत् इहरतिरित्यादिकं मन्त्रम् । 'स यदि···पेत्' स रथी यदि चेदध्वानं गच्छन् दुर्बलः क्षीणो रथोऽस्येति दुर्बलरथः स्याद्भवेत् तदा तं रथमास्थायारुह्य वक्ष्यमाणमन्त्रं जपेत् । 'अयं···षदिति' स रथो यदि पुनर्भ्रम्यात् चलने कुटिलो भवेत्तदा स्तम्भम् रथध्वजदण्डं भूमिं वा उपस्पृश्य जपेत् एष वामश्विना रथ इति मन्त्रम् । 'तस्य···वति' तस्य रथिनः न काचन अर्तिः पीडा नच रिष्टिरुपसर्गो भवति य एवं दुर्बलरथ उद्भ्रान्तरथो वा जपति । 'यात्वा···श्रुतेः' यात्वा गत्वा अध्वानं मार्गं विमुच्य मुक्त्वा किं, रथं रथयुक्तं वाहं यवसं च उदकं च यवसोदके घासपानीये ते दापयेत् अश्वेभ्यो यवसो-दके दीयेतामिति भृत्यान् प्रेषयेत् । कुतः एष उ वाहनस्य अश्वादेरपन्हवः क्षमापनमिति श्रुतेः श्रव-णात्, एष कः तस्माद्येन वाहनेन धावयेत्तद्विमुच्य ब्रूयात् पाययतैनं सुहितं कुरुतेति सूत्रार्थः ॥ १४ ॥

( विश्व० )—'अथातो रथारोहणं' अथानन्तर्ये । इतस्ततो गमनेच्छोः यानापेक्षा भवत्यतो हेतो रथारोहणविधिरुच्यते । युङ्क्षेति संप्रेष्य । रथयोक्तारं सारथिनं रथपतिः सम्यक् युङ्क्षेति प्रैषं ददाति । ततः स रथं युक्त्वा । 'युक्त इति प्रोक्तेऽसा विराडिति' रथयोजनोत्तरं स्वामिनं सारथिना युक्त इति प्रतिप्रोक्ते स्वामी असाविराडितिवक्ति । 'एत्य चक्रे अभिमृशति रथन्तरमसीति दक्षिणं बृहदसीत्युत्तरं' ततो रथसमीपमागत्य रथंतरमसीति मन्त्रेण दक्षिणं चक्रमभिमृशति । ततो बृहदसी-त्युत्तरं चक्रम् । 'वामदेव्यमसीति कूबरीं कूबरं रथाग्रमर्थादीषाग्रमभिमृश्य वामदेव्यमसीति मन्त्रं जपति ।

'हस्तेनोपस्थमभिमृशत्यङ्कौन्यङ्कावभितो रथं यौ ध्वान्तं वाताग्रमनुसंचरन्तौ । दूरे हेतिरिंद्रियावान्पतत्रि तेनोग्नयः पप्रयः पारयन्त्विति । चक्राभिमन्त्रणोत्तरं हस्तेनोपवेशनस्थानमभिमृशति अङ्कौन्यङ्काविति मन्त्रेण । उपस्थं रथमध्यम्। 'नमोमाणिचरायेति दक्षिणधुर्यं प्राजति' रथे उपवेशनानन्तरं नमोमाणीतिमन्त्रेण दक्षिणधुरि युक्तं बलीवर्दमश्वं वा प्राजनेन कशया वा प्राजति प्रेरयति गमनाय। 'गवां मध्ये स्थापयति रथम् अप्राप्य देवताः प्रत्यवरोहेत्' गमने क्रियमाणे दूरतो देवालयदर्शने देवालयमप्राप्य रथादवतरेद्भूमौ । 'संप्रति ब्राह्मणान्' ब्राह्मणान् प्राप्य समीपे प्रत्यवरोहेत् । न दूरतः । 'मध्ये गाः' गाः सुरभीः प्राप्य गवां मध्ये रथादवतरेत् । 'अभिक्रम्य पितॄन्' पित्रादीन् वृद्धान् प्राप्य रथादवतीर्य अभिक्रम्य आभिमुख्येन गत्वा नमस्कृत्यारुह्य गच्छेदिति सर्वत्र योज्यम् । 'न स्त्रीब्रह्मचारिणौ सारथिनौ स्यातां' स्त्रीशब्देन नारी । ब्रह्मचारी द्विविधोऽपि स्त्रीब्रह्मचारिणौ सारथ्ये कर्मणि न प्रयोज्यौ। 'मुहूर्तमतीयाय जपेदिहरतिरिहरमध्वमेकेमास्त्विहरतिरिति च' [अभ्यवाय मुहूर्तमभ्यवायष्मिन्य तत इहरतिरिहरंमासु इहरतिरिहरमतामिति ?] जपेत् । ईयाय आगत्य ततस्ततः । 'स यदि दुर्बलो रथः स्यात्तमास्थाय जपेदयं वामश्विनारथो मादुर्गे मास्तरोरिषदिति' सः रथी दुर्बलरथः स्यात् भवेत् अयं रथोऽध्वानं न पारयिष्यतीति एवंशीलं रथं मत्वा तं रथमास्थाय आरुह्य अयं वेति मत्रं जपेत् । 'स यदि भ्रम्याद्भूम्याछंस्तंभमुपस्पृश्य भूमिं वा जपेदेष वामश्विनारथो मादुर्गे मास्तरोरिषदिति' स रथः यदि भ्रम्याद्भूम्यां न्युब्जीभूतो भवेत् अथवा कुटिलो वक्रो भवेत् । तदा रथस्य ध्वजास्तम्भमुपस्पृश्य कुटिले अधः पतिते भूमिमुपस्पृश्य एष वामिति मन्त्रं जपेत् । 'तस्य न काचनार्त्तिर्न रिष्टिर्भवति' एवं कृते तस्य रथस्वामिनः काचन आर्तिः पीडा न भवति । रिष्टिरपि न भवति । रिष्टिरुपसर्गः । यात्वाऽध्वानं विमुच्य यवसोदके दापयेत्' यात्वा गत्वाध्वानं स्थानं प्राप्य विमुच्य रथं रथाद्बलीवर्दौ अश्वौ वा पृथक्कृत्य यवसोदके दापयेत् यवसं च उदकं च यवसोदके दापयेत् प्रयच्छेद्भक्षाय पानाय च । यवसं तृणानि उदकं प्रसिद्धम् । 'एष उ वाहनस्यापन्हव इति श्रुतेः' एषः वाहनस्य घासपानीयदानं श्रमापनयनम् । तस्माद्येन वाहनेन धावयेत्तद्विमुच्य ब्रूयात्पाययतैनं सुहितं कुरुतेत्येष उअपह्नवः इति श्रुतेः । कुरुतेति बहुत्वं बहुभृत्यविषयम् । इति ब्रूयात् सेवकान्प्रति ॥ १४ ॥

अथातो हस्त्यारोहणम् ॥ १ ॥ एत्य हस्तिनमभिमृशति हस्तियशसमसि हस्तिवर्चसमसीति ॥ २ ॥ अथारोहतीन्द्रस्य त्वा वज्रेणाभितिष्ठामि स्वस्ति मा संपारयेति ॥ ३ ॥ एतेनैवाश्वारोहणं व्याख्यातम् ॥ ४ ॥ उष्ट्रमारोक्ष्यन्नभिमन्त्रयते त्वाष्ट्रोऽसि त्वष्टृदैवत्यः स्वस्ति मा संपारयेति ॥ ५ ॥ रासभमारोक्ष्यन्नभिमन्त्रयते शूद्रोऽसि शूद्रजन्माग्नेयो वै द्विरेताः स्वस्ति मा संपारयेति ॥ ६ ॥ चतुष्पथमभिमन्त्रयते नमो रुद्राय पथिषदे स्वस्ति मा संपारयेति ॥ ७ ॥ नदीमुत्तरिष्यन्नभिमन्त्रयते नमो रुद्रायाप्सुषदे स्वस्ति मा संपारयेति ॥ ८ ॥ नावमारोक्ष्यन्नभिमन्त्रयते सुनावमिति ॥ ९ ॥ उत्तरिष्यन्नभिमन्त्रयते सुत्रामाणमिति ॥ १० ॥ वनमभिमन्त्रयते नमो रुद्राय वनसदे स्वस्ति मा संपारयेति ॥ ११ ॥ गिरिमभिमन्त्रयते नमो रुद्राय गिरि

षदेस्वस्ति मा संपारयेति ॥ १२ ॥ श्मशानमभिमन्त्रयते नमो रुद्राय पितृ-षदे स्वस्ति मा संपारयेति ॥ १३ ॥ गोष्ठमभिमन्त्रयते मनो रुद्राय शकृत्पिण्डसदे स्वस्ति मा संपारयेति ॥ १४ ॥ यत्र चान्यत्रापि नमो रुद्रायेत्येव ब्रूयाद्रुद्रो ह्येवेदठंसर्वमिति श्रुतेः ॥ १५ ॥ सिचाऽवधूतोऽभिमन्त्रयते सिगसि न वज्रोऽसि नमस्तेऽअस्तु मा माहिठंसीरिति ॥ १६ ॥ स्तनयित्नुमभिमन्त्रयते शिवा नो वर्षाः सन्तु शिवा नः सन्तु हेतयः । शिवा नस्ताः सन्तु यास्त्वठं सृजसि वृत्रहन्निति ॥ १७ ॥ शिवां वाश्यमानामभिमन्त्रयते शिवो नामेति ॥ १८ ॥ शकुनिं वाश्यमानमभिमन्त्रयते हिरण्यपर्ण शकुने देवानां प्रहितंगम । यमदूत नमस्तेऽस्तु किंत्वाकार्क्कारिणो ब्रवीदिति ॥१९॥ लक्षण्यं वृक्षमभिमन्त्रयते मा त्वाऽशनिर्मा परशुर्मा वातो मा राजप्रेषितो दण्डः । अङ्कुरास्ते प्ररोहन्तु निवाते त्वाऽभिवर्षतु । अग्निष्टेमूलं माहिठंसीत्स्वस्ति तेऽस्तु वनस्पते स्वस्तिमेऽस्तु वनस्पत इति ॥ २० ॥ स यदि किंचिल्लभेत तत्प्रतिगृह्णाति द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णात्विति साऽस्य न ददतः क्षीयते भूयसी च प्रतिगृहीता भवति । अथ यद्योदनं लभेत तत्प्रतिगृह्य द्यौस्त्वेति तस्य द्विः प्राश्नाति ब्रह्मा त्वाऽश्नातु ब्रह्मा त्वा प्राश्नात्विति ॥ २१ ॥ अथ यदि मन्थं लभेत तं प्रतिगृह्य द्यौस्त्वेति तस्य त्रिः प्राश्नाति ब्रह्मा त्वाऽश्नातु ब्रह्मा त्वा प्राश्नातु ब्रह्मा त्वा पिबत्विति ॥ २२ ॥ अथातोऽधीत्याधीत्यानिराकरणं प्रतीकं मे विचक्षण जिह्वा मे मधु यद्वचः । कर्णाभ्यां भूरिशुश्रुवे मा त्वठं हार्षीः श्रुतं मयि । ब्रह्मणः प्रवचनमसि ब्रह्मणः प्रतिष्ठानमसि ब्रह्मकोशोसि सनिरसि शान्तिरस्यनिराकरणमसि ब्रह्मकोशं मे विश । वाचा त्वा पिदधामि वाचा त्वा पिदधामीति [तिष्ठ प्रतिष्ठ] स्वरकरणकण्ठ्यौरसदन्त्यौष्ठ्यग्रहणधारणोच्चारणशक्तिर्मयि भवतु आप्यायन्तु मेऽङ्गानि वाक् प्राणश्चक्षुः श्रोत्रं यशो बलम् ॥ यन्मे श्रुतमधीतं तन्मे मनसि तिष्ठतु तिष्ठतु ॥ २३ ॥ १५ ॥

( जयरामः )—अथातो हस्त्यारोहणं वक्ष्यत इति शेषः । हस्तिनमेत्य तं स्पृशति हस्तियशसमसीत्यनेन मन्त्रेण । तस्यार्थः । तत्र द्वयोर्ब्रह्मा यजुषी हस्तीन्द्रौ देवते स्पर्शनारोहणयोः । हस्ति-

नाभैरावतत्वेन प्रसिद्धं यश एव हस्तियशसं तद्रूपोऽसि । तथा तेषां वर्चो दीप्तिरेव हस्तिवर्चसं तद्रूपश्चासीति । अथ तमारोहति इन्द्रस्य त्वेति मन्त्रेण । तस्यार्थः इन्द्रस्य वज्रेणायुधेन सहाहमिन्द्रो भूत्वा त्वा त्वामधितिष्ठामि सर्वशत्रुजयार्थमारोहामि, त्वं च मा मां स्वस्ति कल्याणं यथा तथा पारयेत्युक्तार्थम् । एवमेवाश्वारोहणं कर्तव्यम् । तत्र मन्त्रोहः । ऊहश्च हस्तिस्थाने अश्वाभिधानम् । उष्ट्रमारोक्षन् आरोढुमिच्छन् तं दृष्ट्वाऽभिमन्त्रयते त्वाष्ट्रोऽसि इति मन्त्रेण । एतदाद्यर्थः सुगमः । तत्र परमेष्ठी यजुरुष्ट्रस्तदारोहणे० । रासभं चाश्वतरं मन्त्रलिङ्गात् । तदर्थः । तत्र विश्वामित्रः पङ्क्तिः रासभस्तदारोहणे० । हे रासभ त्वं शूद्रः हीनः असि । यतः शूद्रं शोकावहं जन्म यस्य स आग्नेयः । अग्निदेवत्यः अश्वाद्गर्दभ्यामुद्भूतत्वाद् द्विरेताः । चतुष्पथं गच्छंस्तमभिमन्त्रयते नमो रुद्रायेति मन्त्रेण । तत्र परमेष्ठी अनुष्टुप् रुद्रो रक्षणे० । पथिषु सीदति तिष्ठतीति पथिषत्तस्मै । एवमुत्तरत्रापि । सुनावमिति मन्त्रेण नावमारुह्यावतर्तुमिच्छन् सुत्रामाणमिति मन्त्रेणावतरेत् । पितृषदे पितृवनवासिने । यत्रेत्यनुक्तप्रसङ्गेष्वपि नमोरुद्रायेत्येव ब्रूयात् । कुतः । हि यत इदं सर्वं रुद्रमेवेति श्रुतेः । एवं कृते निर्विघ्नता विध्यनुष्ठानफलं च स्यात् । सिचूशब्देन वस्त्रप्रान्तैकदेशो दशेति प्रसिद्धः, तदुत्थो वायुरमङ्गलः । तथाचापस्तम्बसूत्रम् । यदा वाऽपहतं सिचा वा शुना वा अन्नमभोज्यं स्यादिति । तया सिचाऽवधूतो वीजितस्तदा तामभिमन्त्रयते सिगसीति मन्त्रेण । तत्र त्रयाणां प्रजापतिरनुष्टुप् लिङ्गोक्ता अभिमन्त्रणे० । स्तनयित्नुर्मेघगर्जितं श्रुत्वाऽभिमन्त्रयते शिवा न इति मन्त्रेण । अस्यार्थः । हे इन्द्र शिवाः कल्याणकारिण्यो नोऽस्माकं वर्षा वृष्टयः सन्तु । तथा हेतयः ऐन्द्राण्यायुधानि शिवा नोऽस्माकं सन्तु । हे वृत्रहन् याश्च हेतीस्त्वं शत्रुषु सृजसि क्षिपसि ता अपि नः शिवाः सन्तु । शिवां शृगालीं वाश्यमानां शब्दं कुर्वाणामभिमन्त्रयते शिवो नामेति मन्त्रेण । यद्यप्ययं मन्त्रः क्षुरादाने विनियुक्तस्तथापि नानाशक्तित्वादत्रापि विनियुज्यते । शकुनिं कृष्णकाकम् । अथ मन्त्रार्थः । प्रागुक्तमृष्यादि । हे हिरण्यपर्ण शीघ्रग हे शकुने देवानां प्रहितं प्रेषितं स्थानं गच्छतीति देवादिष्टं शुभाशुभं गमयतीति वा भो यमस्य दूत ते तुभ्यंनमोऽस्तु । त्वा त्वां कार्कारिण इति द्वितीयार्थे षष्ठी । कार्कारं काकजात्यनुरूपं शब्दं कुर्वन्तं प्रति यमः किमब्रवीत् । यद्वा । कार्कारिणस्तव स्वामी यमस्त्वां किमब्रवीत् माब्रवीदित्यर्थः । लक्षण्यं प्रसिद्धं यत्प्रसिद्ध्या ग्रामस्यापि प्रसिद्धिर्भवति तं वृक्षं दृष्ट्वाऽभिमन्त्रयते मा त्वेति मन्त्रेण । अस्यार्थः । तत्र प्रजापतिरनुष्टुप् वनस्पतिस्तद्रक्षणे० । हे वृक्ष त्वा त्वां अशनिर्वज्रो मा हिंसीत् मा नाशयतु । एवमुत्तरत्रापि योज्यम् । परशुः कुठारः राजप्रेषितो दण्डो राजोपद्रवः अग्निश्च ते तव मूलं माहिंसीत् । ते तवांकुराश्च प्ररोहन्तु पल्लवा उद्गच्छन्तु । निवाते निर्वाते अल्पवायौ त्वा त्वांप्राप्य देवेन्द्रोऽभिवर्षतु । ते तत्र स्वस्ति कल्याणमस्तु । हे वनस्पते तथा हे वनस्पते मे ममापि स्वस्त्यस्तु । स स्नातको यदि किंचिद् गवादिकं लभेत तत्प्रतिगृह्णाति द्यौस्त्वेति मन्त्रेण, प्रतिग्रहः स्वीकारः । अस्यार्थः । तत्र प्रजापतिरुष्णिक् दक्षिणा स्वीकारे० । हे दक्षिणे द्यौराकाशाभिमानिनी देवता त्वा त्वां ददातु यजमानो देवरूपो भूत्वा ददात्वित्यर्थः । पृथिवी सर्वसहा त्वा त्वां प्रतिगृह्णातु पृथिवीरूपो मानुषो भूत्वा प्रतिगृह्णात्वित्यर्थः । त्वत्पदावृत्तिर्दक्षिणायाः कर्मसाद्गुण्यकर्तृत्वख्यापनार्था । एवं संस्कृता दक्षिणा दातृप्रतिग्राहिणोः सिद्धिकरी भवति । तत्र दातुः सिद्धिरपूर्वोत्पादकत्वेन । प्रतिग्राहिणोऽपि कर्मानुष्ठानयोग्यत्वात् । प्रतिग्रहधना विप्रा इत्यादिवचनात् । सा एवं संस्कृता सती अस्य ददतो न क्षीयते वर्द्धत इत्यर्थः । एवं प्रतिगृहीता सती प्रतिग्रहीतुर्भूयसी प्रचुरतरा भवति, अयं च सर्वप्रतिग्रहे मन्त्रः स्नातकस्य । ओदनं भक्तं तस्य लब्धस्य । अवयवलक्षणा षष्ठीयम् । द्विः द्विवारं प्राश्नाति ब्रह्मात्वेति मन्त्रभेदाभ्याम् । प्रशब्देन मन्त्रभेदः । दधिदुग्धजलानामन्थतममिश्राः सक्तवो मन्थशब्देनाभिधीयन्ते । तं लभेत तदा द्यौस्त्वेति मन्त्रेण

प्रतिगृह्य तस्य त्रिःप्राशनम् ब्रह्मात्वेति प्रतिमन्त्रम् । अस्यार्थः सुगमः । एवं प्रतिग्रहेण दोषाभावोऽपि भवति । दोषश्च, प्रतिग्रहेण विप्राणां ब्राह्मं तेजो विनश्यतीति । यो न धर्मविधिं वेदेत्यादिवचनाद्यो दाता प्रतिग्राही वा न विधिज्ञः स स्तेनः तद्दण्डेन दण्ड्य इत्यर्थः । अथातोऽधीत्याधीत्य आवृत्यावृत्य अनिराकरणम् अविस्मरणं कर्म कर्तव्यम्, प्रतीकंमे विचक्षणमिति मन्त्रेणाङ्गालम्भनम् । तस्यार्थः । तत्र परमेष्ठी गायत्री अङ्गानि तदालम्भने० । प्रतीकं मुखम् मे मम विचक्षणं विशिष्टवर्णोच्चारणसमर्थम् । अस्त्विति शेषः । मधु मधुरं यद्वचस्तद्वदत्विति शेषः । भूरि बहु बहुकालं वा शुश्रुवे शृणवानि । भो ब्रह्मन् वेदपुरुष मयि विषये यच्छ्रुतं शास्त्रं तज्ज्ञानं च त्वं माहार्षीः माहर । तदर्थं स्तौति । ब्रह्मणो वेदस्य प्रवचनमध्ययनं त्वमसि । ब्रह्मणः अधीतस्य वेदस्य प्रतिष्ठानं स्थितिराधार इति यावत् । ब्रह्मणस्तस्य कोशो गोपनगृहम् । सनिः संभजनीयम् । शान्तिरनिष्टनिवृत्तिः । अनिराकरणमप्रमादः अविस्मरणमिति यावत् । किंच । मे मम ब्रह्मकोशं वेदाशयं विश प्रविश । सर्वेषां वेदानाꣳ हृदयमेकायनमिति श्रुतेः । अहं च वाचा सत्यवाण्या त्वा त्वाम् पिदधामि गोपाये छादयामीति वा । यथा मत्तो नापैषि । आवृत्तिर्दार्ढ्यार्था । स्वरा उदात्तादयः, करणानि संवृतादीनि, कण्ठ्याः कण्ठे भवा अकुहविसर्जनीयाः, औरसाः सहकारा वर्गपञ्चमान्तस्थाः, दन्त्याः लृतुलसाः, ओष्ठ्याः उपूपध्मानीयाः, तेषां ग्रहणमुपादानम्, धारणं स्थिरीकरणम्, उच्चारणं प्रयोगः, तेषु शक्तिर्मेऽस्तु । अङ्गानि गात्राणि आप्यायन्तु । तान्याह । वाक् गीः, प्राणो वायुः प्रधानभूत, चक्षुर्नेत्रबलम्, श्रोत्रं तत्पाटवम्, यशः कीर्तिः, बलं शारीरम्, एतान्यङ्गानि आप्यायन्त्विति संबन्धः । परस्मैपदं छान्दसम । यन्मे मया श्रुतं मीमांसादि, अधीतमृगादि । यद्वा श्रुतं गुरुमुखात् अधीतम् अभ्यस्तम् अधिगतं वा तत्सर्वं मे मम मनसि हृदये तिष्ठतु स्थिरमस्तु मापयात्वित्यर्थः । वीप्सा ग्रन्थसमाप्त्यवद्योतनार्था ॥ ॥ १५ ॥ ॥ * ॥

क्षन्तव्यं तच्च विद्वद्भिर्यन्मया चापलं कृतम् । गृह्यभाष्यमलेखीदं दृष्ट्वा कर्कादिकौशलम् ॥१॥ शोधनीयमिदं सद्भिर्मम त्वापत्यचापलम् । बाल्यप्रोत्साहितस्यात्र यदत्र स्खलितं मम ॥ २ ॥ श्रीमन्मान्त्रिकमाधवश्रुतिसुधासिन्धोर्विगाहाप्ततद्वेद्यस्तत्कृपयाऽभवद् द्विजवरः श्रीकेशवस्तादृशः । तस्याङ्घ्रिद्वयकस्पृशा कृतमिदं कातीयसूत्रस्य सद्भाष्यं सज्जनवल्लभं सुविदुषां प्रेष्ठं शिवप्रीतये ॥ ३ ॥ आचार्यापरनामधेय इति यो दामोदरोऽभूद् द्विजो भारद्वाजसुगोत्र आत्मरतिरप्यस्यात्मजस्तादृशः । नाम्ना श्रीबलभद्र आप्तसुयशास्तत्सूनुनैतत्कृतं भाष्यं सज्जनवल्लभं जययुजा रामेण मत्यै शुभम् ॥ ४ ॥ कर्कादिद्विजवर्याणां दृष्ट्वा भाष्याणि भूरिशः । उपचेतुं तदुच्छिष्टं जयरामोऽलिखत्स्फुटम् ॥ ॥ ५ ॥ ॥ * ॥

इति श्रीमत्कातीयगृह्यसूत्रभाष्ये सज्जनवल्लभाख्ये जयरामकृतौ तृतीयकाण्डविवरणं समाप्तम् ॥

( हरिहरः )—'अथा···हणम्' अथ रथारोहणानन्तरं यतोऽधिकृतस्य हस्त्यारोहणमप्यपेक्षितं भवति अतो हेतोः हस्त्यारोहणं वक्ष्यत इति सूत्रशेषः । 'एत्य···सीति' एत्य हस्तिसमीपमागत्य हस्तिनं गजम् अभिमृशति आलभते हस्तियशसमसीति मन्त्रेण । 'अथा···रयेति' अथाभिमर्शनानन्तरमारोहति हस्तिनं इन्द्रस्यत्वेति मन्त्रेण । 'एते···ख्यातम्' एतेनैव हस्त्यारोहणेनैव अश्वारोहणं व्याख्यातं कथितम् अतश्चाश्वसमीपं गत्वाऽश्वमभिमृशति अश्वयशसमस्यश्ववर्चसमसीति मन्त्रेण । ततोऽश्वमारोहति, इन्द्रस्य त्वा वज्रेणाभितिष्ठामि स्वस्ति मा संपारयेत्यनेन मन्त्रेण । 'उष्ट्र···रयेति' उष्ट्रं क्रमेलकम् आरोढुमिच्छन्नभिमन्त्रयते त्वाष्ट्रोसीत्यादिना मन्त्रेण । 'रास···रयेति' रासभं गर्दभमारोढुमिच्छन् शूद्रोऽसीत्यादिना मन्त्रेणाभिमन्त्रयते

अभिमुखः सन् मन्त्रं पठति । रासभोऽत्राश्वतरः प्रतीयते मन्त्रलिङ्गात् । 'चतु···रयेति' चतुष्पथम् चत्वारः पन्थानो यस्मिन्स चतुष्पथः चतुर्मार्गाभिसरणप्रदेशस्तमभिमन्त्रयते नमो रुद्राय पथिषदे इत्यादिमन्त्रेण । 'नदी···रयेति' नदीं स्रवन्तीमुत्तरिष्यन् पारं जिगमिषन् नमो रुद्रायाप्सुषद इति मन्त्रेणाभिमन्त्रयते । 'नाव···मिति' नावं तरीम् आरोढुमिच्छन् सुनावमारोहेत्यनयर्चाऽभिमन्त्रयते । 'उत्त···णमिति' उत्तरिष्यन्नुत्तर्तुं प्रत्यवरोढुमिच्छन् तामेवाभिमन्त्रयते सुत्रामाणमित्यनयर्चा । 'वन···रयेति' वनं काननं प्रवेष्टुमिच्छन् नमो रुद्राय वनसद इत्यादिनाऽभिमन्त्रयते । 'गिरि···रयेति' गिरिं पर्वतमारोढुकामोऽभिमन्त्रयते नमो रुद्राय गिरिषद इति मन्त्रेण । 'श्मशा···रयेति' श्मशानं प्रेतदहनभूमिं कार्यवशात्प्राप्य नमो रुद्राय पितृषदे इति मन्त्रेणाभिमन्त्रयते । 'गोष्ठ···रयेति' गोष्ठं गोवाटं कार्यवशात्प्राप्य नमो रुद्राय शकृत्पिण्डसद इत्यादिमन्त्रेणाभिमन्त्रयते । 'यत्र···श्रुतेः' यत्र च येषु अन्यत्रापि अन्येष्वपि अनुक्तकार्येषु पूर्ववन्नमो रुद्रायेत्येव ब्रूयात् । पश्चात्तानि कर्माणि कुर्यात् । कुतः, हि यतः इदं विश्वं रुद्र एवेति श्रुतेर्वेदवचनात् । 'सिचा···सीरिति' सिचा वस्त्रप्रान्तेनावधूतः तद्वाताहतस्तदा तां सिचमभिमन्त्रयते सिगसीत्यादिमन्त्रेण । 'शिवा···न्निति' स्तनयित्नुं मेघं गर्जन्तं शिवानो वर्षा इत्यादिमन्त्रेणाभिमन्त्रयते । 'शिवां···नामेति' शिवां शृगालीं वाश्यमानां शब्दं कुर्वाणां शिवो नामेत्यादिमामाहिꣳसीरित्यन्तेन मन्त्रेणाभिमन्त्रयते । 'शकु···वीदिति' शकुनिं पक्षिणं कृष्णकाकमिति यावत् । वाश्यमानं कूजन्तं हिरण्यपर्णेत्यादिमन्त्रेणाभिमन्त्रयते । 'लक्ष···स्पत इति' लक्षण्यं वृक्षं मङ्गल्यं तरुमाम्रादिकमभिमन्त्रयते मात्वाशनिरित्यादिमन्त्रेण । 'स यदि···त्विति' स द्विजः यदि चेत् किंचित् गोभूहिरण्यादिकं लभेत प्राप्नुयात् तदा द्यौस्त्वेति मन्त्रेण तत्प्रतिगृह्णाति स्वीकुरुते । 'साऽस्य···वति' सा दक्षिणा एवंविधाय दीयमाना अस्य ददतः दातुः उपयुज्यमानाऽपि न क्षीयते न ह्रसति प्रत्युत एवं प्रगृहीता सती भूयसी च उत्तरोत्तरमभिवर्धमाना भवति । 'अथ···त्विति' अथ कदाचित् ओदनं भक्तं यदि लभेत प्राप्नुयात्तदा तत्प्रतिगृह्य आदाय द्यौस्त्वा ददात्विति मन्त्रं पठेत् मन्त्रपाठस्तु आदानानन्तरं सर्वत्र स्वसत्तापत्तये । तस्य लब्धस्यौदनस्य द्विः द्विवारं प्राश्नाति भक्षयति । कथं ब्रह्मा त्वाऽश्नात्विति प्रथमम् ब्रह्मा त्वा प्राश्नात्विति द्वितीयम् । 'स यदि···त्विति' स द्विजः यदि मन्थं दधिमन्थं लभेत प्राप्नुयात्तदा तं प्रतिगृह्यादाय द्यौस्त्वा ददात्विति मन्त्रेण स्वीकृत्य तस्य दधिमन्थस्य त्रिस्त्रिवारं प्राश्नाति, कथम् ब्रह्मा त्वाऽश्नातु इति प्रथमं, ब्रह्मा त्वा प्राश्नात्विति द्वितीयं, ब्रह्मा त्वा पिबत्विति तृतीयमिति त्रिभिर्मन्त्रैः । 'अथा···णम्' अथेदानीं यतो द्विजानां प्रतिदिनमध्ययनं विहितमतः कारणात् अधीत्याधीत्य पठित्वा पठित्वा अनिराकरणम् अपरित्यागः कर्तव्यः वक्ष्यमाणनिगदेन । तद्यथा । 'प्रती···ष्ठतु' अस्यार्थः । प्रतीकं मुखं मे मम विचक्षणं साधुशब्दोच्चारणसमर्थमस्त्विति सूत्रशेषः । मे मम जिह्वा यद्वचो वचनं मधु मधुरं रसवत् तद्वदत्विति शेषः । एवमभीप्सितः शेषः सर्वत्र पूरणीयः । कर्णाभ्यां भूरि बहु शुश्रुवे शृणुयाम् । मयि विषये यत् श्रुतमधीतं पठितं वर्तते तत्त्वं मा हार्षीः मापनय । मयि विषये ब्रह्मणो वेदस्य प्रवचनं पाठनं व्याख्यानं वा असि भवेत्यर्थः । तथा ब्रह्मणो वेदस्य प्रतिष्ठानं प्रतिष्ठा स्थितिरित्यर्थः असि । मयीत्यनुवर्तते । ब्रह्मकोशोऽसि ब्रह्मणः शब्दरूपस्य कोशः गोपनगृहं गुप्तिस्थानं मयि असि । तथा सनिः समं जीवनमसि । तथा शान्तिः अनिष्टस्य अनिष्टहेतोश्च शमनमसि । तथा निराकरणं परित्यागः न निराकरणमनिराकरणमसि । मे मम ब्रह्मकोशं हृदयं विश । सर्वेषां वेदानाꣳ हृदयमेकायनमिति श्रुतेः । वाचा गिरा त्वा त्वामपिदधामि छादयामि । आवृत्तिरादरार्था । स्वरा उदात्तानुदात्तस्वरिताः करणानि शब्दस्य उत्पत्तेरभिव्यक्तेर्वा साधनानि उरःकण्ठशिरोजिह्वामूलदन्तनासिकोष्ठताल्व-

नीत्यष्टौ । कण्ठे भवाः कण्ठ्याः अवर्णकेवलहकारकवर्गविसर्गाः । उरसि भवा औरसाः सहकार-वर्गपञ्चमान्तस्थाः, दन्तेषु भवाः दन्त्याः लवर्णतवर्गसकाराः, ओष्ठे भवा औष्ठ्याः उवर्णपवर्गोपध्मानीयाः । स्वराश्च करणानि च कण्ठ्याश्च औरसाश्च दन्त्याश्च औष्ठ्याश्च स्वरकरणकण्ठ्यौरस-दन्त्यौष्ठ्याः एतेषां ग्रहणम् उपादानम् धारणं स्थिरीकरणमुच्चारणं प्रयोगः, ग्रहणं च धारणं च उच्चारणं च ग्रहणधारणोच्चारणानि तेषु शक्तिः स्वरादीनां धारणादिसामर्थ्यं मय्यस्तु । मे मम अङ्गानि गात्राणि आप्यायन्तु वर्द्धन्ताम् । न केवलमङ्गानि किन्तु वाक् गीः प्राणः प्राणवायुः सूत्रात्मेति यावत्, चक्षुर्नयनेन्द्रियं श्रोत्रं श्रवणेन्द्रियं यशः कीर्तिः बलं शारीरमोजः । एतान्यपि वागादीनि आप्यायन्त्वित्यनुषङ्गः । यन्मे मया श्रुतं मीमांसादि अधीतं ऋगादि तत्सर्वं मे मनसि तिष्ठतु सुस्थिरमस्तु । वीप्सात्रार्थभूयस्त्वप्रतिपादनपरा ग्रन्थसमाप्तिज्ञापनार्था वा । इति सूत्रार्थः ।

अथ परिशिष्टोक्तं पृष्टोदिविविधानं लिख्यते । केशान्तादूर्ध्वमपत्नीक उत्सन्नाग्निरनग्निको वा प्रवासी ब्रह्मचारी वा मातृपूजापूर्वकमाभ्युदयिकं श्राद्धं कृत्वा अन्वग्निरित्यनयर्चाऽग्निमाहृत्य पञ्चभूसंस्कारान्कृत्वा पृष्टोदिविपृष्टो अग्निः पृथिव्यामित्यनयर्चाऽग्नेः स्थापनम् । तत्सवितुः ताᳬं सवितुः विश्वानिदेवसवितरित्येताभिस्तिसृभिः सावित्रीभिः प्रज्वालनमग्नेः । अथ तस्मिन्नग्नौ सायंप्रातर्होमपञ्चमहायज्ञपिण्डपितृयज्ञपक्षाद्याग्रयणादि कुर्यात् । मणिकावधानादिसर्वमावसथ्याधानादिवत् । अनुदिते च होमः । एवं कृते न वृथा पाको भवति । न वृथा पाक पचेन्न वृथा पाकमश्नीयान्न वृथा पाकमश्नीयादिति ॥ १५ ॥ ॥ ❋ ॥

इत्यग्निहोत्रिश्रीहरिहरविरचितायां पारस्करगृह्यसूत्रव्याख्यानपूर्विकप्रयोगपद्धतौ
तृतीयः काण्डः समाप्तः ॥ शुभं भवतु ॥ ❋ ॥

( विश्व० )—'अथातो हस्त्यारोहणं' हस्त्यारोहणेच्छायां दत्ते वा हस्तिनि विधिरुच्यते । स्वेच्छायां प्रात्यहिकं परेच्छायां कदाचित्कम् । एवमुत्तरत्रापि यथासंभवमूह्यम् । अधिकृतस्य क्षत्रियस्य स्वेच्छया । आप्तहस्तिनो ब्राह्मणस्येत्यतो हेतोरारोहणविधानम् । एत्य हस्तिनमभिमृशति हस्तियशसमसि हस्तिवर्चसमसीति ' एत्य स्वस्थानात् हस्तिसमीपमागत्य हस्तिनमभिमृशति हस्तेन हस्तियशसमिति मन्त्रेण । 'अथारोहतींद्रस्यत्वा वज्रेणाभितिष्ठामि स्वस्ति मा संपारयेति ' अथ अभिमन्त्रणानन्तरं हस्तिनमारोहति इन्द्रस्यत्वेतिमन्त्रेण यात्वाध्वानं विमुच्य यवसोदकदानं पूर्वोक्तमत्राप्युत्तरत्रापि च ज्ञेयं वाहनशब्दसाम्यात् । ' एतेनैवाश्वारोहणं व्याख्यातं ' तत्र मन्त्रे हस्तिपदस्थाने अश्वपदं प्रयोज्यम् । अभिमर्शने अश्वयशसमस्यश्ववर्चसमसीति । तत इन्द्रस्यत्वेत्यारोहणम् । 'उष्ट्रमारोक्ष्यन्नभिमन्त्रयते त्वाष्ट्रोसि त्वष्टृदेवत्यः स्वस्ति मा संपारयेति' त्वरागमनेच्छोरन्ययोः प्रतिग्रहे ब्राह्मणस्यापि आरोहणात्पूर्वं त्वाष्ट्रोसीति पठित्वा अभिमन्त्र्य आरोहेत् । 'रासभमारोक्ष्यन्नभिमन्त्रयते शूद्रोसि शूद्रजन्माग्नेयो वै द्विरेताः स्वस्ति मा संपारयेति' रासभो गर्दभः, तमारोढुमिच्छन अभिमन्त्रयते शूद्रोसीति मन्त्रेण द्विरेता इति मंत्रगतविशेषस्तेनाश्वतरो गम्यते । सोऽत्यन्तं सुखगामी त्वरद्गतिश्च भवतीति । ' पन्थानमभिमन्त्रयते नमो रुद्राय पथिषदे स्वस्ति मा संपारयेति ' ग्रामान्तरेगन्तुमिच्छन् ग्रामाद्बहिर्निःसृत्य मार्गमभिमन्त्रयते नमोरुद्राय पथिषदेति मन्त्रेण । एवं मार्गे यदा चतुष्पथस्तदा विशेषः ' चतुष्पथमभिमन्त्रयते नमोरुद्राय चतुष्पथसदे स्वस्ति मा संपारयेति ' चत्वारः पन्थानो यस्मिन् स चतुष्पथः नमोरुद्राये मन्त्रं जपेत् । ' नदीमुत्तरिष्यन्नभिमन्त्रयते नमो रुद्रायाप्सुपदे स्वस्ति मा संपारयेति ' नदीं वहंतीमुदकवतीं परपारं गन्तुमिच्छन्नमोरुद्रायेत्यभिमन्त्रयते ' । स्नानं विनैवोत्तरिष्यन्नभिमन्त्र्य परपारं गत्वा स्नानादि कर्तव्यम् । सरस्वत्यां स्नात्वा नित्यं विधायाभिमंत्र्य परपारे गन्तव्यमिति विशेषः ॥ ' नावमारोक्ष्यन्नभिमन्त्रयते सुनावमिति ' नावं

नौकां तरीं तयां पूरवतीं नदीमवतरितुमिच्छन्नौकारोहणकाले नौकामभिमन्त्रयते सुनावमिति मन्त्रेण ॥ उत्तरिष्यन्नभिमन्त्रयते सुत्रामाणमिति । प्रपारं गत्वा नौकायाः सकाशात् अवरोहणं कर्तुमिच्छन् नावमभिमन्त्रयते नौकास्थित एव सुत्रामाणमिति । ततोऽवतरेत् ॥ 'वनमभिमन्त्रयते नमोरुद्राय वनसदे स्वस्ति मा संपारयेति' वनं वृक्षवीरुधाकुलितं प्रदेशं प्राप्याभिमन्त्रयते नमो रुद्रायेति ॥ 'गिरिमभिमन्त्रयते नमो रुद्राय गिरिषदे स्वस्ति मा संपारयेति' गिरिं प्राप्यारोढुमिच्छन्नमोरुद्रायेत्यभिमन्त्रयते । 'श्मशानमभिमन्त्रयते नमोरुद्राय पितृषदे स्वस्ति मा संपारयेति' श्मशानं मनुष्यदाहभूमिं प्राप्याभिमन्त्रयते नमोरुद्रायेति । 'गोष्ठमभिमन्त्रयते नमोरुद्राय शकृत्पिंडसदे स्वस्तिमा संपारयेति' गोष्ठं गवां बन्धनस्थानं ग्रामाद्बहिरेकीकरणस्थानं वा तमभिमन्त्रयते नमोरुद्रायेति । यत्र चान्यत्रापि नमो रुद्रायेत्येव ब्रूयात् । इमानि दिग्दर्शनमात्रेणोक्तानि । एतद्व्यतिरिक्तेष्वपि कर्मसु कर्मारम्भे नमोरुद्रायेति पूर्वं ब्रूयात् वदेत् । कुतः? 'रुद्रो ह्येवेदꣳसर्वमिति श्रुतेः' इदं सर्वं पृथिव्यां पदार्थजातमात्रं तत्सर्वं रुद्र एवेति श्रुतेः । 'सिचावधूतोऽभिमन्त्रयते सिगसि न वज्रोसि नमस्ते अस्तु मा मा हिꣳसीरिति' वस्त्रप्रान्तभागः सिगुच्यते । तेनावधूतः व्यजनरूपेण, अभिमन्त्रयते तं सिगसीति । वैदिकपाठक्रमं त्यक्त्वा भाष्यव्याख्याक्रमेणाह । 'स्तनयित्नुमभिमन्त्रयते शिवा नो वर्षाः सन्तु शिवा नः सन्तु विद्युतः । शिवा नस्ताः सन्तु य स्त्वꣳ सृजसि वृत्रहन्निति । स्तनयित्नुर्दददइतिमहच्छब्दं दर्शयति श्रुतौ तेन स्तनयित्नुः सर्वरूपो महागर्जनशीलो मेघः । तमभिन्त्रयते शिवान इति । 'शिवां वाश्यमानामभिमन्त्रयते शिवो नामेति' शिवा वृद्धा श्रृगाली । तां शिवां शब्दं कुर्वाणामभिमंत्रयते शिवोनामासीति । 'शकुनिं वाश्यमानमभिमन्त्रयते हिरण्यपर्ण शकुने देवानां प्रहितं गमः । यमदूत नमस्तेऽस्तु किं त्वा कार्कारिणोऽब्रवीदिति' शकुनिः कृष्णकाकः । तं शब्दं कुर्वन्तमभिमन्त्रयते हिरण्यपर्ण इति । 'क्षेम्यो ह्येव भवति' एवं पूर्वोक्तेषु अभिमंत्रणेषु यथोक्तमभिमन्त्रिते अभिमन्त्रणकर्तुः कुशलं भवति । 'लक्षण्यं वृक्षमभिमन्त्रयते मा त्वाऽशनिर्मा परशुर्मा वातो मा राजप्रेषितो दण्डः । अङ्कुरास्ते प्ररोहन्तु निवाते त्वाभिवर्षतु । अग्निष्टे मूलं माहिꣳसीः स्वस्ति तेस्तु वनस्पते इति' लक्षणसंपन्नं पत्रपुष्पफलवन्तमाम्रादिवृक्षमाभिमन्त्रयते मा त्वाशनिरित्यादिना । 'सपदि किंचिल्लभेत तत्प्रगृह्णाति द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णात्विति' सः प्रतिग्रहकर्ता किंचित् हिरण्यगोभूकन्यावस्त्रधान्यघृतादिकं लभेत तदा तत् द्यौस्त्वेतिमन्त्रेण प्रतिगृह्णाति । अथ यद्योदनं लभेत तत्प्रतिगृह्णाति द्यौस्त्वा गृह्णात्विति । इष्टावोदनं पक्त्वा दक्षिणात्वेन ऋत्विग्भ्यो दीयते तदोदनं द्यौस्त्वेति दानोत्तरं प्रतिगृह्य गृहीत्वा मन्त्रं पठेत् । लब्धस्यौदनस्य भक्षणमन्त्रं प्राशनं चाह 'तस्य द्विः प्राश्नाति ब्रह्मा त्वाश्नातु ब्रह्मा त्वा प्राश्नात्विति' तस्य मन्त्रेण प्रतिगृहीतस्य वारद्वयं प्राश्नाति । कथं ? ब्रह्मात्वाश्नात्विति प्रथमम् । ब्रह्मा त्वा प्राश्नात्विति द्वितीयवारम् । 'अथ यदि मन्थं लभेत् तत्प्रतिगृह्णाति द्यौस्त्वा० गृह्णात्विति । मन्थस्तु दधिसक्तवः पित्रेष्ट्यां लभते तस्यावघ्राणं वा प्राशनं वा । अथवा लौकिकेऽपि मन्थे लब्धे द्यौस्त्वेति प्रतिगृह्य। 'तस्य त्रिः प्राश्नाति ब्रह्मा त्वाश्नातु ब्रह्मा त्वा प्राश्नातु ब्रह्मा त्वा पिबत्विति । तस्य लब्धस्य मन्थस्य त्रिः वारत्रयं प्राश्नाति पृथङ्मन्त्रैः । ते च । ब्रह्मा त्वाश्नातु, ब्रह्मात्वा प्राश्नातु ब्रह्मा त्वा पिबतु० इत्येभिर्मन्त्रैः प्राशनं मन्थस्य । 'अथातोऽधीत्याधीत्यानिराकरणं' अथानन्तरमध्ययनान्तरं पठित्वा प्रत्यहमनिराकरणम् । निराकरणं नाम परित्यागः । परित्यागे पुस्तकनिरपेक्षतया पठनं कर्त्तुं न शक्यते । अतो हेतोरनिराकरणमपरित्यागः । पठित्वा वक्ष्यमाणेनानिराकरणम् । प्रतीकं मे विचक्षणं जिह्वा मे मधु यद्वचः । कर्णाभ्यां भूरिशुश्रुवे मा त्वाहार्षीः श्रुतं मयि । ब्रह्मणः प्रवचनमसि ब्रह्मणः प्रतिष्ठानमसि ब्रह्मकोशोऽसि सनिरसि शान्तिरस्यनिराकरणमसि ब्रह्मकोशं मे विश वाचा त्वां पिदधामि ।

वाचा त्वा पिदधामि । तिष्ठ प्रतिष्ठ स्वरकरणकण्ठ्यौरसदन्त्यौष्ठ्यग्रहणधारणोच्चारणशक्तिर्मयि भवतु । आप्यायन्तु मेऽङ्गानि वाक्प्राणश्चक्षुः श्रोत्रं यशो बलम् । यन्मे श्रुतमधीतं तन्मे मनसि तिष्ठतु तिष्ठत्विति । अथातोऽधीत्याधीत्यानिराकरणं कर्त्तव्यमुक्तं तदनिराकरणं कृत्वा मन्त्राः पठनीयास्ते मन्त्राः प्रतीकं मे विचक्षणमित्यादयः । तत्र शरीरदोषं त्यक्त्वा मुखादि मन्त्रान्तःपरिपठितं ममास्त्वित्याशीःप्रार्थनम् । एतत्सर्वं ममास्त्विति मन्त्रार्थः । तिष्ठत्विति वीप्सा काण्डसमाप्तिज्ञापनार्था ॥ १५॥

अभून्नन्दपुरे मुञ्जो नागरो गोत्रकश्यपे । लक्ष्मीधरो भवत्तस्मात्सूर्यदत्तस्तु तत्सुतः ॥ १ ॥
तस्मादाशाधरो जातो नारसिंहाभिधस्ततः । तत्सुतेन कृतं भाष्यं विश्वनाथेन धीमता ॥ २ ॥
पारस्करस्य गृह्यस्य पञ्चखण्डावशिष्टकम् । गरिष्ठं सर्वभाष्येषु बह्वर्थं निर्णयान्वितम् ॥ ३ ॥
महादेवजगन्नाथपुत्रपौत्रप्रपौत्रकैः । गोपनीयं निरीक्ष्यं च पठितव्यं समाहितैः ॥ ४ ॥
नारसिंहाग्रजोऽनन्तस्तस्य यो वै प्रपौत्रकः । लक्ष्मीधराऽभिधस्तम्भतीर्थात्काश्यां समागतः ॥५॥
उपहासं पुरस्कृत्य ह्रियं कृत्वा तु पृष्ठतः । भाष्यान्यन्यानि चालोक्य पञ्चखण्डान्यलीलिखत् ॥६॥
तेनैव चास्य भाष्यस्य पूर्त्तिर्जाता यथातथा । संवन्नेत्रग्रहकला १६९२ मितेऽब्दे चोत्तरायने ।
समाप्तिमगमद्भाष्यं माघे भूते १४ सिते कुजे ॥ ७ ॥

इति श्रीमत्सर्वविशारदपंडितश्रीनारसिंहसुतपंडितश्रीविश्वनाथकृते
पारस्करगृह्यसूत्रव्याख्याने तृतीयं काण्डं समाप्तम् ॥ ३ ॥

---

## परिशिष्टानि ।

अथातो वापीकूपतडागारामदेवतायतनानां प्रतिष्ठापनं व्याख्यास्यामः । तत्रोदगयन आपूर्यमाणपक्षे पुण्याहे तिथिवारनक्षत्रकरणे च गुणान्विते तत्र वारुणं यवमयं चरुꣳ श्रपयित्वाऽऽज्यभागाविष्ट्वाऽऽज्याहुतीर्जुहोति त्वं नो अग्न इमं मेवरुण तत्वायाभि येते शतमयाश्चाग्न उदुत्तममुरुꣳहि राजा वरुणस्यो-त्तम्भनमग्नेरनीकमिति दशर्चꣳ हुत्वा स्थालीपाकस्य जुहोत्यग्नये स्वाहा सोमाय स्वाहा वरुणाय स्वाहा यज्ञाय स्वाहोग्राय स्वाहा भीमाय स्वाहा शतक्रतवे स्वाहा व्युष्टचै स्वाहा स्वर्गाय स्वाहेति यथोक्तꣳ स्विष्टकृत् प्राश-नान्ते जलचराणि क्षिस्वाऽलंकृत्य गां तारयित्वा पुरुषसूक्तं जपन्नाचार्याय वरं दत्वा कर्णवेष्टकौ वासाꣳसि धेनुर्दक्षिणा ततो ब्राह्मणभोजनम् ॥ ❀ ॥

### दीक्षितकामदेवकृतं गृह्यपरिशिष्टकण्डिकाभाष्यं प्रयोगपद्धतिसहितम् ।

श्रीः ॥ ' अथा···स्यामः ' अथशब्दो मङ्गलार्थः आनन्तर्यस्य पाठादेव सिद्धेः । अतःशब्दो-हेत्वर्थः यतोऽप्रतिष्ठितं वाप्यादिकमश्रेयस्करं अतः प्रतिष्ठापनं व्याख्यास्याम इति प्रतिज्ञा शिष्य-बुद्धिसमाधानार्था ॥ ' तत्रो···कमिति ' तत्रेति तस्मिन् प्रतिष्ठापने उदगयनादिकाले यथोक्तं चरुं कुशकण्डिकोक्तप्रकारेण श्रपयित्वा आघारावाज्यभागौ हुत्वोक्तैर्दशभिर्मन्त्रैर्दशाज्याहुतीर्जुहोति । उद-गयनमुत्तरायणमापूर्यमाणपक्षः शुक्लपक्षः पुण्याह इति शास्त्रान्तरोक्तकाले । तिथिवारनक्षत्रकरणानां गुणान्वितत्वं शास्त्रान्तरविहितत्वम् । तच्च किंचित्संक्षेपेण प्रदर्श्यते । यथा मदनरत्नोदाहृतवह्निपु-राणे—वापीकूपतडागानां तस्मिन्काले विधिः स्मृतः । सुदिने शुभनक्षत्रे प्रतिष्ठा शुभदा स्मृता । १ । कर्कटे पुत्रलाभश्च सौख्यं तु मकरे भवेत् । मीने यशोऽर्थलाभश्च कुम्भे वसुबहूदकम् । २ । वृषे च मिथुने वृद्धिर्वृश्चिकेऽल्पजलं भवेत् । पितृतृप्तिस्तु कन्यायां तुलायां शाश्वती गतिः । सिंहो मेषो धनुर्नाशं लक्ष्म्याश्च द्विज यच्छतीति । तत्रैव भविष्योत्तरेऽपि । तस्मिन् सलिलसंपूर्णे कार्तिके च विशेषतः । तडागस्य विधिः कार्यः स्थिरनक्षत्रयोगतः । १ । मुनयः केचिदिच्छन्ति व्यतीतेऽप्युत्त-रायणे । न कालनियमस्तत्र सलिलं तत्र कारणमिति । एवमादिग्रन्थान्तरादवगन्तव्यं विस्तरभयान्न लिख्यते । चकारात् योगेऽपि गुणान्विते वैधृतिव्यतीपातादिवर्जिते इत्यर्थः ॥ यवमयं चरुं श्रपयित्वे-त्येतावतैव सिद्धे यद्वारुणग्रहणं तद्वरुणस्य प्राधान्यज्ञापनार्थम् । ततश्च तदन्तराये पुनः स्थालीपाक-स्योत्पत्तिः । कृतोऽपि देवतान्तरहोमः पुनरावर्तनीयः । तदुक्तं छन्दोगपरिशिष्टे कात्यायनाचार्यैः । प्रधानस्याक्रिया यत्र साङ्गं तत्क्रियते पुनः ॥ तदङ्गस्याक्रियायां तु नावृत्तिर्नैव तत्क्रियेति । देवता-न्तरान्तराये तु प्राक्समाप्तेरनादिष्टप्रायश्चित्तपूर्वकं स्थालीपाकात्तस्य होमः । तदलाभे त्वाज्येनैव । उर्ध्वं समाप्तेस्तु विष्णुस्मरणमेवेति प्रयोजनम् । श्रीमदनन्तदेवस्वामिचरणैस्तु प्रयोजनान्तरमुक्तम् । वारुणमिति तद्धितेन वरुणस्यैव चरुदेवतात्वावगमे वक्ष्यमाणाहुतिपु यथालिङ्गमग्न्यादिशब्दैर्वरुणं ध्यात्वेदमग्नये इत्येव त्यागो बोध्यः । आग्नेया इति तु स्थितिरिति नैरुक्तविधिवशेन प्रयाजेपु समिदा-दिशब्दैरग्निध्यानपूर्वकमिदं समिद्भ्य इत्यादि त्यागवदिति ॥ दशर्चꣳ···स्वाहा ' दशर्चꣳ हुत्वेत्य-

यमनुवाद आहुतीनामपि मन्त्रसमसंख्यत्वप्राप्त्यर्थः । ततश्च समं स्यादश्रुतत्वादिति न्यायेन एकैकेन मन्त्रेणैकैकाहुतिः । यद्वा वरुणस्योत्तम्भनमित्यत्र पञ्चानामपि वाक्यानां मन्त्रैकत्वज्ञापनार्थम्। तदित्थम्। ऋचो यजूꣳषि सामानि निगदा मन्त्रा इति भगवता कात्यायनाचार्येण ऋगादीनां चतुर्णां पृथक् मन्त्रत्वमुक्तम् । ततश्च सामान्यत एका ऋक् एको मन्त्रः। एकं यजुरेकः। एकं सामैकः। एको निगदश्चैकः । तत्र तेषां वाक्यं निराकाङ्क्षं मिथः संबद्धमिति तेन, भगवता जैमिनिना च अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्यादिति वाक्यलक्षणमप्युक्तम् । अत्र च पञ्चस्वप्याख्यातभेदेन लक्षणस्य भिद्यमानत्वात्पञ्चवाक्यान्येतानि। ततश्च पञ्चैते मन्त्राः । अत एवानुक्रमणिकाकारेण वरुणस्य पञ्च वारुणानीति पञ्चसंख्याविशिष्टो यजुर्भेद उक्तः । एवं च सति न्यायतः करणमन्त्राणां समुच्चयाभावाद्वाचनिकोऽयं समुच्चयः चतुर्भिरादत्त इतिवत् । ततश्च प्रकृते नवऋचो नव मन्त्राः। पञ्चभिर्मिलितैर्यजुर्भिश्चैकः। एवं दशैते मन्त्राः। किंच स्मार्ते कर्मणि सवत्रोत्सर्गतः कण्डिकान्तो मन्त्र इत्याचारोऽप्यनुगृहीत एव। तथाच गृह्यकारिकाकारः । गृह्यकर्मसु ये मन्त्रा ज्ञेयाः स्वाध्यायपाठतः। किंच मध्यमवृत्त्या ते न द्रुता न विलम्बिता इति। ऋक्पदं तु कण्डिकापरम् यथा गौतमादीनृषीन्सप्त कृत्वा दर्भमयान्पुनः। पूजयित्वा विधानेन तर्पयेदृचमुद्धरन्, इत्यत्र बौधायनीयवाक्ये ऋक्पदमृग्यजूभयसाधारण्येन कण्डिकापरमित्यङ्गीकृतमुत्सर्गकारिकाकारेण । मन्त्रैर्द्वाभ्यां च मुर्द्धेति माछन्दस्त्रितयेन च। एवः षोडशभिर्मन्त्रैः सप्तर्षय इत्येकया इत्यादिना। एवमत्रापि ज्ञेयमित्यलं विस्तरेण। स्थालीपाकस्येत्यवयवलक्षणा षष्ठी, स्थालीपाकस्यावयवं जुहोतीयेवम्। यद्वा कर्मणि षष्ठी। 'यथोक्तꣳस्विष्टकृत्' स्विष्टकृदादि गृह्योक्तप्रकारेण कर्तव्यमित्यर्थः। 'प्राश...पन्' स्विष्टकृद्धोमानन्तरं भूरादिप्राजापत्यान्ता नवाहुतीर्हुत्वा संस्रवप्राशनं च कृत्वा पूर्णपात्रवरयोरन्यतरद्ब्रह्मणे दत्त्वा जलचराणि मत्स्यादीनि प्रत्यक्षाणि प्रतिमारूपाणि वा जलमध्ये प्रक्षिप्य सौवर्णशृङ्गाद्यलंकृतां गां सहस्रशीर्षेतिषोडशर्चं पुरुषसूक्तं त्रैस्वर्येण पठन् ऐशानाभिमुखीं जलेऽवगाह्य ब्राह्मणाय प्रतिपादयेत्। अत्र मदनरत्ने मत्स्यपुराणोक्तो विशेषः। जलाशयं च त्रिवृता सूत्रेण परिवेष्टयेत्। पात्रीमादाय सौवर्णां पञ्चरत्नसमन्विताम्। ततो निक्षिप्य मकरं मत्स्यादींस्तांश्च सर्वतः धृता चतुर्भिर्विप्रैस्तु वेदवेदाङ्गपारगैः। महानदीजलोपेतां दध्यक्षतविभूषिताम्। उत्तराभिमुखो न्युब्जां जलमध्ये तु कारयेत्। आथर्वणेन साम्ना तु पुनर्मामेत्यृचेति च। आपोहिष्ठेति मन्त्रेण क्षिप्त्वाऽऽगत्य च मण्डपभिति। आथर्वणं साम शंनोदेवीरित्यस्यामृचि गीतमिति व्याख्यातं च। भविष्योत्तरेऽपि। सामान्यं सर्वभूतेभ्यो मया दत्तमिदं जलम्। रमन्तु सर्वभूतानि स्नानपानावगाहनैः। एवं जलं जले क्षिप्त्वा पूजयेज्जलमातरः। तोष्याः कर्मकराः सर्वे कुद्दालानि च पूजयेत् इति। बह्वृचगृह्यपरिशिष्टे तु जलावतारितगोदानान्ते, तत उत्सर्गं कुर्यात्। देवपितृमनुष्याः प्रीयन्तामिति यश्चोत्सृजत इत्याह शौनक इत्युत्सर्ग उक्तः। मत्स्यादीनां विशेषोऽपि मदनरत्न एव। सौवर्णौ कूर्ममकरौ राजतौ मत्स्यदुन्दुभौ। ताम्रौ कुलीरमण्डूकावायसः शिशुमारकः। दुन्दुभो राजिलः। एते स्वर्णपात्र्यां स्थाप्या इति। 'वासो...क्षिणा च' चकारो द्रव्यसमुच्चयार्थः वासोयुगमं धेनुश्च दक्षिणेति यावत्। इयं च दक्षिणा आचार्यस्यैव। ततश्च तस्यापि वरणम्। ब्रह्मणस्तु पूर्णपात्रादिकैव। तथाच पाठान्तरम्। गां तारयित्वाचार्याय वरं दत्वा कर्णवेष्टकौ वासाꣳसि धेनुर्दक्षिणा चेति। यद्वा स्मार्ते कर्मणि यजमानस्यैव कर्तृत्वमिति भाष्यकारीयसिद्धान्तात् उपदिष्टेनातिदिष्टं बाध्यत इतिन्यायात्पूर्णपात्रादिकं बाधित्वैव प्रवर्तते धुर्यौ दक्षिणेतिवत्। अतएव प्राशनान्ते जलचराणि क्षिप्त्वेत्यत्र प्राशनान्तग्रहणं प्राकृतकालविशिष्टदक्षिणाबाधार्थम्। जलचरप्रक्षेपादेरपूर्वत्वेन न्यायात्प्राशनान्त एव प्राप्तत्वात्पश्चादग्नेर्मद्रेपीठ इत्यादिवत्। पाठान्तरपक्षे तु वैवाहिकवरदानवदुपद्रष्टृविषया स्वकीयाचार्यविषया वा इयमधिका

अन्यैव । ' ततो ब्राह्मणभोजनम् ' कर्तव्यमिति सूत्रशेषः दशैकादश वाऽवश्यं भोजनीयाः । गर्भाधानादिभिर्यज्ञैर्ब्राह्मणान् भोजयेद्दशेति परिशिष्टकारोक्तेः । ततः सहस्रं विप्राणामथवाऽष्टशतं तथा । भोजयेच्च यथाशक्त्या पञ्चाशद्वाऽथ विंशतिमिति मत्स्यपुराणोक्तवचनं तु समर्थविषयम् । इति श्रीदीक्षितकामदेवकृतं गृह्यपरिशिष्टकण्डिकाया भाष्यं समाप्तम् ।

अथ प्रयोगः । तत्र कालविशेषो मदनरत्ने । अनधिकालुप्तसंवत्सरे असिंहमकरस्थगुरौ अगुर्वादित्ये अमलमासक्षयमासे अलुप्तदिनद्वये पक्षे अनवमदिनादौ भूकम्पाशन्युल्काद्यद्भुतदोषरहिते काले उत्तरायणे माघफाल्गुनचैत्रवैशाखज्येष्ठाषाढान्यतममासे रविशुद्धावयनद्वयविषुवद्वयकन्यामीनधनुरन्यतमसंक्रान्तौ शुक्लपक्षे द्वितीयातृतीयापञ्चमीसप्तमीदशमीत्रयोदशीपौर्णमासीनामन्यतमतिथौ शनिमङ्गलान्यवारेषु भरणीकृत्तिकार्द्रापुनर्वस्वाश्लेषामघापूर्वाफाल्गुनीविशाखाव्यतिरिक्तनक्षत्रेषु विष्कम्भातिगण्डव्याघातवज्रव्यतीपातपरिघवैधृतिव्यतिरिक्तकरणेषु यजमानस्य चन्द्रताराविशुद्धौ बुधशुक्रगुरुचन्द्रनिरीक्षिते लग्ने जलाशयोत्सर्गं कुर्यादिति । एवमुक्तकाले जलाशयस्योदगैशान्यप्राक्पश्चिमान्यतमदिशि समीपे एव प्रागुदक्प्रवणे सुसमे भूभागे पूर्वं दशहस्तादिमण्डपं विधायालंकृत्य तत्र स्वासने प्राङ्मुख उपविश्य पवित्रपाणिः स्वाचान्तः प्राणानायम्य श्रीविष्णुस्मरणपूर्वकं देशकालादिसंकीर्तनान्ते श्रीपरमेश्वरप्रीत्यर्थं तडागप्रतिष्ठापनमहं करिष्ये । एवमारामादिष्वप्यूहेन संकल्पं कृत्वा तदङ्गत्वेन गणपतिपूजानान्दीश्राद्धनवग्रहयज्ञांश्च करिष्ये इति पुनः संकल्पक्रमेणैतानि कुर्यात् ऋत्विग्वरणानन्तरं वा पुण्याहवाचनम् । ततो ग्रहमखानन्तरं प्रधानाङ्गत्वेन पुनराचार्यस्य ब्रह्मणश्च वरणं कुर्यात् । तत्र वाक्यम् । कर्तव्यामुकजलाशयप्रतिष्ठापनेऽमुकगोत्रामुकशर्मन् त्वमाचार्यो भवेति । भवामीति प्रतिवचनम् । एवं ब्रह्मा भवेति । ततो यथाशक्ति तयोः पूजनं क्रमेण प्रार्थनञ्च । आचार्यस्तु यथा स्वर्गे शक्रादीनां बृहस्पतिः । तथा त्वं मम यज्ञेऽस्मिन्नाचार्यो भव सुव्रत ॥ यथा चतुर्मुखो ब्रह्मा सर्ववेदविशारदः । तथा त्वं मम यज्ञेऽस्मिन् ब्रह्मा भव द्विजोत्तमेति । सदस्यवरणं कृताकृतम् । पक्षे आचार्यवरणस्याप्यभावः । ततो वृतश्चेदाचार्यः अथवा यजमानः स्थण्डिले पञ्चभूसंस्कारपूर्वकमग्निं स्थापयित्वा वारुणं यवमयं चरुं यथाविधि श्रपयित्वा आज्यभागान्ते आज्येनैव त्वं नो अग्न इत्यादिभिर्दशभिर्मन्त्रैः प्रतिमन्त्रं दशाहुतीर्जुहुयात । तद्यथा । ॐ प्रजापतये स्वाहा इदं प्रजापतये० । १ । ॐ इन्द्राय स्वाहा इदमिन्द्राय० २। ॐ अग्नये स्वाहा इदमग्नये० ३ । ॐ सोमाय स्वाहा इदं सोमाय० ४ । त्वं नो अग्न इति वामदेवऋषिः अग्नीवरुणौ देवते त्रिष्टुप्छन्दः आज्याहुतिहोमे वि० । ॐ त्वं नो अग्ने० प्रमुमुग्ध्यस्मत्स्वाहा । इदमग्नीवरुणाभ्यां नमम । सत्वं इति वामदेवऋषिः अग्नीवरुणौ देवते त्रिष्टुप्छन्दः आज्याहु० । ॐ सत्वं नो० एधिस्वाहा इदमग्नीवरुणाभ्यां० २ । इमं म इति शुनः शेप० वरुणोदे० गायत्री० आज्या० । ॐ इमं मे० चके स्वाहा इदं वरुणाय० ३ । तत्वायामीति शुनःशेप० वरुणो दे० त्रिष्टुप्० आज्या० । ॐ तत्वायामि० प्रमोषीःस्वाहा इदं वरुणाय० ४ । येते शतमिति वामदेव० त्रिष्टुप्० वरुणःसविताविष्णुर्विश्वेदेवामरुतःस्वर्का देवताः आज्या० । ॐ येते शतं वरुण ये सहस्रं यज्ञियाः पाशा महान्तः । तेभिर्नो अद्य सवितोत विष्णुर्विश्वे मुञ्चन्तु मरुतः स्वर्काः स्वाहा । इदंवरुणाय सवित्रे विष्णवे विश्वेभ्यो देवेभ्यो मरुद्भयः स्वर्केभ्यश्च नमम ५ । अयाश्चाग्ने इतिवामदेव० त्रिष्टुप्० अग्निर्देवता आज्या० ॐ अयाश्चाग्नेस्यनभिशस्तिपाश्च सत्यमित्वमया असि । अयानो यज्ञं वहास्ययानो धेहि भेषजꣳ स्वाहा इदमग्नये० ६ अयसे इत्यधिकमिति केचित् । उदुत्तममिति शुनः शेप० वरुणोदे० त्रिष्टुप्० आज्या० । ॐ उदुत्तमं० स्याम स्वाहा । इदं वरुणाय नमम ७ । उरुꣳहिराजेति शुनः शेप० त्रिष्टुप० वरुणो दे० आज्या० । ॐ उरुꣳ हि राजा०

श्चित् स्वाहा इदं वरुणाय नमम ८। वरुणस्योत्तम्भनमिति पञ्चयजुषां प्रजापति० वरुणो० यजूंषि आज्या०। ॐ वरुणस्योत्तम्भन० मासीद स्वाहा० इदं वरुणाय० ९। अग्नेरनीकमिति प्रजापति० अग्निर्दे० त्रिष्टुप्० आज्या०। ॐ अग्नेरनीक० रण्यत्स्वाहा इदमग्नये० १०। अभिघार्य स्थालीपाकं जुहुयात्। तत्र मन्त्राः। ॐ अग्नये स्वाहा इदमग्नये० १। ॐ सोमाय स्वाहा इदं सोमाय०२। ॐ वरुणाय स्वाहा इदं वरुणाय० ३। ॐ यज्ञाय स्वाहा इदं यज्ञाय० ४। ॐ भीमाय स्वाहा इदं भीमाय ५। ॐ उग्रायस्वाहा इदमुग्राय० ६। ॐ शतक्रतवे स्वाहा इदं शतक्रतवे० ७। ॐ व्युष्ट्यै स्वाहा इदं व्युष्ट्यै०८। ॐ स्वर्गाय स्वाहा इदं स्वर्गाय० ९। अथ ब्रह्मणाऽन्वारब्ध ॐ अग्नये स्विष्टकृते स्वाहा इदममग्नये स्विष्टकृते० १०। तत आज्येन भूरादिप्राजापत्यान्ता नवाहुतीर्जुहुयात्। तद्यथा ॐ भूः स्वाहा इदमग्नये० १। ॐ भुवः स्वाहा इदं वायवे० २। ॐ स्वः स्वाहा इदं सूर्याय० ३। ॐ त्वन्नो अग्ने ४। ॐ सत्वं नो अग्ने ५। ॐ अयाश्चाग्ने ६। ॐ येतेशतं ७। ॐ उदुत्तमं ८। ॐ प्रजापतये स्वाहा इदं प्रजापतये० ९। ततः संस्रवप्राशनम् १। पवित्राभ्यां मार्जनम् २। पवित्रप्रतिपत्तिः ३। प्रणीताविमोकः ४। ब्रह्मणे पूर्णपात्रदानम्। कृतैतदुत्सर्गहोमसाङ्गतासिद्ध्यर्थमिदं पूर्णपात्रं ब्रह्मन् तुभ्यमहं संप्रददे। तेन श्रीकर्माङ्गदेवता प्रीयताम्॥ ॥ अथ शाखान्तराज्जलाशयं त्रिवृता सूत्रेण ईशानादिप्रादक्षिण्येन परिवेष्ट्य तत्र जलचराणि प्रक्षिपेत्। तत्र प्रकारविशेषो यथा मदनरत्ने मत्स्यपुराणोक्तः। पञ्चरत्नसमन्वितां संस्थापितमकरादिकां सौवर्णीं पात्रीं समादाय जलाशयसमीपे प्राङ्मुखस्तिष्ठन् दक्षहस्तेनैव पूर्वं मकरं प्रक्षिप्य ततः सर्वतो मत्स्यादीन् प्रक्षिपेत्। तेऽपि सौवर्णौ कूर्ममकरौ राजतौ मत्स्यदुन्दुभौ। ताम्रौ कुलीरमण्डूकावायसः शिशुमारकः, इति द्रव्यविशेषतो ज्ञेयाः। ततस्तां पात्रीं गङ्गादिमहानदीजलोपेतां दध्यक्षतविभूषितां कृत्वा उत्तराभिमुखस्तिष्ठन् आपोहिष्ठेति तिसृभिर्ऋग्भिर्जलमध्ये न्युब्जां कुर्यात्। आपोहिष्ठेति तिसृणां सिन्धुद्वीप ऋषिः आपो देवता गायत्रीछन्दः पात्रीन्युब्जीकरणे विनियोगः। ॐ आपोहिष्ठा० चनः इति तां न्युब्जीकुर्यात्। ततः सुवर्णशृङ्गादियथाशक्त्यलंकृतां गां पुरुषसूक्तं जपन् तारयेत्। विशेषः पाराशरस्मृतौ। अरोगां वत्ससंयुक्तां सुरूपां भूषणान्विताम्। गोवत्सौ वस्त्रबद्धौ तावाग्नेय्यां दिशि संस्थितौ। वायव्याभिमुखौ तत्र तारयेद्वारिमध्यत इति। पुरुषसूक्तस्य नारायणः पुरुषऋषिः जगद्बीजं पुरुषो देवता पञ्चदशानामनुष्टुप्छन्दः षोडश्यास्त्रिष्टुप्छन्दः जले गोरवतारणे विनियोगः। ॐ सहस्रशीर्षा० देवाः। ततो यजमानो नित्यतर्पणवद्देवर्षिपितृतर्पणं गोपुच्छाग्रे कुर्यात्। प्राङ्मुखः स्वयमुदक्स्थितायाः पुच्छाग्रे नित्यतर्पणं कृत्वा ततो " ब्रह्माद्यादेवताः सर्वे ऋषयो मुनयस्तथा। असुरा यातुधानाश्च मातरश्चण्डिकास्तथा। दिक्पाला लोकपालाश्च ग्रहदेवाधिदेवताः। ते सर्वे तृप्तिमायान्तु गोपुच्छोदकतर्पिताः। विश्वेदेवास्तथादित्याः साध्याश्चैव मरुद्गणाः। क्षेत्रपीठोपपीठानि नदा नद्यश्च सागराः। ते स०। पातालनागकन्याश्च नागाश्चैव सपर्वताः। पिशाचा गुह्यकाः प्रेता गन्धर्वा गणराक्षसाः। ते०। पृथिव्यापश्च तेजश्च वायुराकाशमेव च। दिवि भुव्यन्तरिक्षे च येच पातालवासिनः। ते०। शिवः शिवास्तथा विष्णुः सिद्धिर्लक्ष्मी सरस्वती। तपोवनानि भगवानव्यक्तः परमेश्वरः। ते स०। क्षेत्रौषधिलता वृक्षा वनस्पत्यधिदेवताः। कपिलः शेषनागश्च तक्षकोऽनन्त एव च। ते०। अन्ये जलचरा जीवा असंख्यातास्त्वनेकशः। चतुर्दश यमाश्चैव येचान्ये यमकिङ्कराः। ते०। सर्वेऽपि यक्षराजानः पक्षिणः पशवश्च ये। स्वेदजोद्भिज्जा जीवा अण्डजाश्च जरायुजाः। ते०। अन्येऽपि वनजीवा ये दिवा निशि विहारिणः। अजागोमहिषीरूपा ये चान्ये पशवस्तथा। शान्तिदाः शुभदास्ते स्युर्गोपुच्छोदकतर्पिताः। आब्रह्मस्तम्बपर्यन्तं येचान्ये गोत्रिणो मृताः। ते०। सर्पव्याघ्रहता ये च शस्त्रघातमृताश्च ये। संस्काररहिता ये च रौरवादिषु गामिनः। ते०। वृक्षत्वं च गताः केचित् तृणगुल्म-

लताश्च ये । यातनासु च घोरासु जातीषु विविधासु च । ते० । नरकेषु च घोरेषु पतिताः स्वेन कर्मणा । देवत्वं मानुषत्वं वा तिर्यक्प्रेतपिशाचताम् । कृमिकीटपतङ्गत्वं याता ये च स्वकर्मभिः । ते० । पितृवंशे० ज्ञाता २ कुले मम । ते पिबन्तु मया दत्तं गोपुच्छस्य तिलोदकम् । ये बान्धवा २ वा येऽन्यजन्मनि बान्धवाः । ते० गोपुच्छस्य तिलोदकैः । आब्रह्मस्तं० इदमस्तु तिलोदकम् ॥ गोप्रार्थना । पञ्चगावः समुत्पन्ना मथ्यमाने महोदधौ । तासां मध्ये तु या नन्दा तस्यै देव्यै नमो नमः । १ । चन्दनपुष्पैः पूजयेत् । यथा । पृष्ठे ब्रह्मणे नमः १ गले विष्णवे नमः २ मुखे रुद्राय नमः ३ मध्ये देवगणेभ्यो नमः ४ रोमकूपे महर्षिभ्यो नमः ५ पुच्छे नागेभ्यो नमः ६ खुराग्रे कुल-पर्वतेभ्यो नमः ७ मूत्रे गङ्गादिनदीभ्यो नमः ८ नेत्रयोः शशिभास्कराभ्यां नमः ९ एते यस्याः स्तनौ देवाः सा धेनुर्वरदाऽस्तु मे । २ । अथ दानम् । केचिदीशानकोणमार्गेण तां निष्काश्य ब्राह्मणाय दद्यादित्याहुः, तत्र वचनमन्वेषणीयम् ॥ आज्यपात्रं करे कृत्वा कनकेन समन्वितम् । निक्षिप्य पुच्छं तस्मिँस्तु घृतदिग्धं प्रगृह्य च । सतिलं विप्रपाणौ तु प्रागग्रं तन्निधाय च । सतिलं सकुशं चापि गृहीत्वा दानमाचरेत् ॥ ततो गोपुच्छं हस्ते गृहीत्वा कुशयवजलान्यादाय अद्येत्यादि दशपूर्वदशपरात्मीय-पुरुषसहितात्मनः संभावितनरकोद्धरणपूर्वकं ऐहिकसकलसमृद्धिप्राप्तिपूर्वकसवत्सगोरोमसमसङ्ख्य-वर्षस्वर्गप्राप्तिकामः इमां गां रुद्रदैवतां सुवर्णशृङ्गीं रौप्यखुरां ताम्रपृष्ठीं कांस्यदोहां मुक्तादामघण्टा-चामरविभूषितां रत्नपुच्छीं सुवस्त्राच्छादितां कृतैतदुत्सर्गसाङ्गतासिद्धयर्थममुकगोत्रायामुकशाखाध्या-यिनेऽमुकशर्मणे ब्राह्मणाय तुभ्यमहं संप्रददे नमम इति प्रागग्रं पुच्छं विप्रहस्ते दद्यात् । ॐ स्वस्ति इति विप्रः । ततः कामस्तुतिं पठेत् कोदादिति मन्त्रः । गोदानसाङ्गतासिद्धयर्थं दक्षिणां दद्यात् । कूपवाप्योस्तूपरि गोस्त्रिर्भ्रामणमिति निबन्धकाराः ॥ ॥ अथात्र सूत्रानुक्तमपि पौराणिकमुत्सर्गादिकं फलाधिक्यात्कर्तव्यम् । तद्यथा । यजमानः कुशाक्षतजलान्यादाय प्राङ्मुखः सन् पठेत् । सामान्यं सर्वभूतेभ्यो मया दत्तमिदं जलम् । रमन्तु सर्वभूतानि स्नानपानावगाहनैः । १ । इति जलमध्ये जल-प्रक्षेपेणोत्सर्गं कुर्यात् । यद्वा देवपितृमनुष्याः प्रीयन्तामित्युत्सर्गमन्त्रः । ततो जलाशये गङ्गोदकादि-तीर्थोदकानि । जलाशयं स्पृष्ट्वा पञ्चमन्त्रान् पठेत् । कुरुक्षेत्रं गया गङ्गा प्रभासः पुष्कराणि च । एतानि पञ्चतीर्थानि तडागे निवसन्तु मे । १ । वितस्ता कौशिकी सिन्धुः सरयूश्च सरस्वती । एतानि पञ्च० । २ । दशार्णा मुरला सिन्धुरयावर्त्तदृषद्वती । एतानि पञ्च तीर्थानि० । ३ । यमुना नर्मदा रेवा चन्द्रभागा च वेदिका । एतानि पञ्च० । ४ । गोमती वाङ्मती शोणो गण्डकी सागर-स्तथा । एतानि पञ्च० । ५ । कूपोत्सर्गपक्षे निपाने निवसन्तु मे इत्यूहः । प्रवाप्यां निवसन्त्विति च वाप्यामूहः । ततो जलमातृपूजा चन्दनपुष्पादिना । सा यथा । ॐ ह्रियै नमः १ ॐ श्रियै नमः २ । ॐ शच्यै नमः ३ ॐ मेधायै नमः ४ ॐ विश्वायै नमः ५ ॐ लक्ष्म्यै नमः ६ इत्येतैर्मन्त्रैर्जल-मातृभ्यो नम इत्यनेन वा जलमातृपूजनं कृत्वा, तोष्याः कर्मकराः सर्वे कुदालानि च पूजयेत् इति । ततो मण्डपमागत्य वस्त्रयुग्मं धेनुं च दक्षिणामाचार्याय दद्यात् । अत्र पाराशरस्मृतौ विशेषः । अर्द्धं शतं शतं वाऽपि विंशमष्टोत्तरं शतम् । गोसहस्रं शतं वाऽपि शतार्द्धं वा प्रदीयते । अलाभे चैव गां दद्यादेकामपि पयस्विनीम् । अरोगां वत्ससंयुक्तां सुरूपां भूषणान्वितामिति । पाठक्रमादर्थक्रमो बली-यान् तथासत्येवं ११०० वा १५० वा १०८ वा १०० वा ५० वा २० वा १ । कृतस्यामुकजला-शयस्य प्रतिष्ठाकर्मणः साङ्गतासिद्धयर्थं इदं बार्हस्पत्यं वासोयुग्मं रुद्रदैवतां धेनुं च दक्षिणामाचार्याय तुभ्यमहं संप्रददे नमम तेन श्री कर्माङ्गदेवताः प्रीयन्तामिति । ततः शरण्यं सर्वलोकानां लज्जाया रक्षणं परम् । सुवेषधारि त्वं यस्माद्वासः शान्तिं प्रयच्छ मे । १ । धेनो त्वं पृथिवी सर्वा यस्मात्केशव-सन्निभा । सर्वपापहरा नित्यमतः शान्तिं प्रयच्छ मे । २ । इति दानमन्त्रौ पठेत् । ॐ

द्यौस्त्वा ददातु पृथिवी त्वा प्रतिगृह्णातु इत्याचार्यस्य प्रतिग्रहमन्त्रः । पाराशरीये । वस्त्रयुग्मानि विप्रेभ्यश्छत्रिका मुद्रिकाः शुभाः । दद्याद्विप्रेभ्यः संतोष्य छत्रोपानहमेव च । सुहेमपुरुषयुक्तां शय्यां दद्याच्च शक्तितः ।। सुहेमपुरुषो लक्ष्मीनारायणप्रतिमा । आसनानि च शस्तानि भाजनानि निवेदयेत् । प्रसादयेद् द्विजान्भक्त्या इच्छन् पूर्तफलं नरः । कृताञ्जलिपुटो भूत्वा विप्राणामग्रतः स्थितः । ब्रूयाद्देवा भवन्तोऽत्र सर्वे विप्रवपुर्धराः । तटं यूयं तारयध्वं संसारार्णवतो द्विजाः । आगता मम पुण्येन पूर्तधर्मप्रसाधकाः । इति विप्रप्रार्थना । ततः सहस्रं विप्राणामथवाऽष्टशतं तथा । भोजयेच्च यथाशक्त्या पञ्चाशद्वाऽथविंशतिमिति मात्स्यवचनम् । यद्वा गर्भाधानादिभिर्यज्ञैर्ब्राह्मणान् भोजयेद्दशेति परिशिष्टकारोक्तेः दशावरान् ब्राह्मणान् भोजयिष्ये इति संकल्पः । ततस्तानविलम्बेन भोजयेत् । दीनानाथेभ्यो भूयसीं च दत्त्वा कर्म ईश्वरार्पणं कुर्यात् । कृतैतत्कर्म लक्ष्मीनारायणार्पितमस्तु । ततआचारप्राप्तं तिलकाशीर्वादादि । आरामप्रतिष्ठायां तु वृक्षाणां वस्त्रैरभावे सूत्रैर्वेष्टनम् । जलमातृकापूजास्थाने वनस्पतिभ्यो नम इति वृक्षेषु वनस्पतिपूजनम् । देवपितृमनुष्याः प्रीयन्तामित्यनेनैव पाक्षिक उत्सर्गः । कृतस्यारामप्रतिष्ठापनकर्मणः साङ्गतासिद्ध्यर्थमिति दक्षिणादानादौ प्रयोगः । गोभ्रमणं मध्ये । उत्तरतो निष्कासनम् । जलचरप्रक्षेपस्य जलाशयस्पर्शजपादेश्चाभावः । एवं देवालयप्रतिष्ठायां सूत्रादिना वेष्टनम् । आचारादुपरि ध्वजबन्धनम् । अमुकदेवायतनाय नम इति पूजनं च । कृतस्य देवायतनप्रतिष्ठाकर्मणः साङ्गतासिद्ध्यर्थमिति दक्षिणादानादौ प्रयोगः । चतुःषष्टिपदवास्तुपूजनमपीति विशेषः । अन्यत्सर्वं पूर्ववत् । यजमानस्य स्वकर्तृत्वपक्षे तु आचार्यवरणाभावः । दक्षिणादानं ब्रह्मणे पूर्णपात्रादिस्थाने । यद्वा वैवाहिकवरदानवदुपद्रष्ट्रे । उपनयनपूर्वकवेदाध्यापकाचार्याय वा । ग्रहयज्ञस्य प्रधानेन सह समानतन्त्रता वा । तत्राज्यभागान्ते वरुणस्योत्तम्भनमिति कण्डिकया आज्याहुतिरेका । ततः समिद्धोमः । ततो दशर्चेन । ग्रहचरुहोमपूर्वको वरुणचरुहोमः । ततस्तिलहोमादि । एवमासादनादावपि क्रमो बोद्धव्यः । ग्रहयज्ञाङ्गत्वेन मण्डपकरणपक्षे तु शतपदं वास्तु बलिदानमण्डपप्रतिष्ठादिकमप्यधिकम् । प्रासादप्रतिष्ठायां तु मण्डपाभावपक्षेऽपि नियमेन चतुःषष्टिपदो वास्तुरित्युक्तमित्यलं ग्रन्थगौरवेण ।। ।। * ।। ।।

इति श्रीमदग्निचिद्दीक्षितविश्वामित्रात्मजदीक्षितकामदेवकृता गृह्यपरिशिष्टस्य षष्ठिकण्डिकायाः सभाष्यपद्धतिः समाप्तिं पफाण ।। ।। * ।। ।।

---

अथातः शौचविधिं व्याख्यास्यामो दूरं गत्वा दूरतरं गत्वा यज्ञोपवीतं शिरसि दक्षिणकर्णे वा धृत्वा तृणमन्तर्धान कृत्वोपविश्याहनीत्युत्तरतो निशायां दक्षिणत उभयोः संध्ययोरुदङ्मुखो नाग्नौ न गोसमीपे नाप्सु नागे वृक्षमूले चतुष्पथे गवाङ्गोष्ठे देवब्राह्मणसंनिधौ दहनभूमिं भस्माच्छन्नं देशं फालकृष्टभूमिं च वर्जयित्वा मूत्रपुरीषे कुर्यात् । ततः शिश्नं गृहीत्वोत्थायाद्भिः शौचं गन्धलेपहरं विदध्यात् । लिङ्गे देया सकृन्मृद्वै त्रिवारं गुदे दशधा वामपाणावुभयोः सप्तवारं मृत्तिकां दद्यात् । करयोः पादयोः सकृत्सकृदेव मृत्तिका देयेति शौचं गृहस्थानां द्विगुणं ब्रह्मचारिणां त्रिगुणं वनस्थानां चतुर्गुणं यतीनामिति ॥ यद्दिवा विहितं शौचं तदर्धं

निशाया भवति मार्गे चेत्तदर्धमार्त्तश्चेद्यथाशक्ति कुर्यात् ॥ १ ॥ प्रक्षालितपाणिपादः शुचौ देश उपविश्य नित्यं बद्धशिखी यज्ञोपवीती प्रागुदङ्मुखो वा भूत्वा जान्वोर्मध्ये करौ कृत्वाऽशूद्रानीतोदकैर्द्विजातयो यथाक्रमं हृत्कण्ठतालुगैराचामन्ति । न तद्भिन्नोष्ठेन न विरलाङ्गुलिभिर्न तिष्ठन्नैव हसन्नापि फेनबुद्बुदयुतम् । ब्रह्मतीर्थेन त्रिः पिबेत् द्विः परिमृजेत् । ब्राह्मणस्य दक्षिणहस्ते पञ्चतीर्थानि भवन्ति अङ्गुष्ठमूले ब्रह्मतीर्थं कनिष्ठिकांगुलिमूले प्रजापतितीर्थं तर्जन्यङ्गुष्ठमध्यमूले पितृतीर्थमङ्गुल्यग्रे देवतीर्थं मध्येऽग्नितीर्थमित्येतानि तीर्थानि भवन्ति ॥ २ ॥ प्रथमं यत्पिबति तेन ऋग्वेदं प्रीणाति द्वितीयं यत्पिबति तेन यजुर्वेदं प्रीणाति तृतीयं यत्पिबति तेन सामवेदं प्रीणाति चतुर्थं यदि पिबेत्तेनाथर्ववेदेतिहासपुराणानि प्रीणाति यदङ्गुलिभ्यः स्रवति तेन नागयक्षकुबेराः सर्वे वेदाः प्रीणन्ति यत्पादाभ्युक्षणं पितरस्तेन प्रीणन्ति यन्मुखमुपस्पृशत्यग्निस्तेन प्रीणाति यन्नासिके उपस्पृशति वायुस्तेन प्रीणाति यच्चक्षुरुपस्पृशति सूर्यस्तेन प्रीणाति यच्छ्रोत्रमुपस्पृशति दिशस्तेन प्रीणन्ति यन्नाभिमुपस्पृशति ब्रह्मा तेन प्रीणाति यद्धृदयमुपस्पृशति तेन परमात्मा प्रीणाति यच्छिर उपस्पृशति रुद्रस्तेन प्रीणाति यद्बाहू उपस्पृशति विष्णुस्तेन प्रीणाति मध्यमानामिकया मुखं तर्जन्यङ्गुष्ठेन नासिकां मध्यमाङ्गुष्ठेन चक्षुषी अनामिकाङ्गुष्ठेन श्रोत्रं कनिष्ठिकाङ्गुष्ठेन नाभिं हस्तेन हृदयं सर्वाङ्गुलिभिः शिर इत्यसौ सर्वदेवमयो ब्राह्मणो देहिनामित्याह इत्येवं शौचविधिं कृत्वा ब्रह्मलोके महीयते ब्रह्मलोके महीयते इत्याह भगवान् कात्यायनः ॥ ॥ ❀ ॥ ॥

इति कात्यायनकृतं परिशिष्टशौचसूत्रं समाप्तम् ॥

---

अथातो नित्यस्नानं नद्यादौ मृद्गोमयकुशतिलसुमनस आहृत्योदकान्तं गत्वा शुचौ देशे स्थाप्य प्रक्षाल्य पाणिपादं कुशोपग्रहो बद्धशिखी यज्ञोपवीत्याचम्योरुरुंहीति तोयमामन्त्र्यावर्तयेद्येतेशतमिति सुमित्रियान इत्यपोऽञ्जलिनादाय दुर्मित्रिया इति द्वेष्यं प्रति निषिञ्चेत्कटिं बस्त्यूरू जङ्घे चरणौ

